* ओ३म् *

# सामवेदभाष्यम्

□ श्रीरामनाथ वेदालङ्कार, एम० ए०, पी-एच० डी०
१/११६ फूलबाग, पंतनगर (नैनीताल)



नमाम्यादौ परेशं तं जगन्मङ्गलहेतुकम् ।
विविधज्ञानपूर्णं यश्चक्रे वेदचतुष्टयम् ॥ १ ॥

पदे पदे नवं यस्य पाठे पाठे मनोहरम् ।
राजते वेदकाव्यं यन्न ममार न जीर्यति ॥ २ ॥

ततो महर्षीन् सकलान् नमामि, व्याख्यासु वेदस्य कृतश्रमा ये ।
शाकल्यगार्ग्यप्रमुखान् सुधीन्द्रान्, यास्कादिकान् वैदिकमर्मविज्ञान् ॥३॥

श्रद्धान्वितो वेदधुरीणमाप्तं, देवं दयानन्दमहं प्रणौमि ।
वेदार्थमार्गे निजभाष्यजातां, कीर्त्ति वरेण्यां भुवि यस्ततान ॥४॥

आर्षाणां मुन्यृषीणां या व्याख्यारीतिः सनातनी ।
तां समाश्रित्य मन्त्रार्था विहिता येन नान्यथा ॥५॥

यस्य भाष्यप्रतापेन कलङ्का वेददूषकाः ।
सर्वेऽप्यपगताः सूर्यात् तमोजालं यथा क्षणात् ॥६॥

ऋग्यजुर्भाष्ययोरेव लेखनी तस्य प्रसृता ।
तस्मात्तु सामवेदस्य भाष्यं ... मया ॥७॥

नास्मिन् मद्गौरवं किञ्चिद् गुरोरेवास्ति गौरवम् ।
तेनैव दर्शितं मार्गमनुधावामि ... ॥८॥

तातं गोपालरामाख्यं ... प्रभुम् ।
श्रद्धानन्दं गुरूंश्चान्यान् वेदटीकां समारभे ॥९॥

क्वचिद्यदि प्रमादेन स्खलन्नाप्नोमि दुर्गतिम् ।
सुधियो मे करालम्बं प्रदद्युरिति कामये ॥१०॥

ओं विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव ।
यद्भ॒द्रं तन्न॒ आ सु॑व ॥ ऋ० ५ । ८२ । ५

१ २ ३ १ २र ३ १ २ ३ १ २
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
२ ३ १ २ ३ १ २
धियो यो नः प्रचोदयात् ॥ सा० उ० ६ । ३ । १० । १

# अथ सामवेदभाष्यारम्भः क्रियते

### तत्र पूर्वार्चिकः (छन्द आर्चिकः)

## आग्नेयं पर्व काण्डं वा

आग्नेयपर्वणि तावच्चतुर्दशोत्तरशतं ( ११४ ) मन्त्रा वर्तन्ते, येषां प्रायेण[1] अग्निरेव देवता। अग्निदेवताकत्वादेवाग्नेयमिति संज्ञा। ज्ञानकर्मकाण्डयोरुपासनायाश्च चरमोत्कर्षो ज्ञानकर्मणोरुपासनायां परिणतिश्च सामवेदस्य विषयः[2]। द्विविधौ खलु वेदानामर्थौ, पारमार्थिको व्यावहारिकश्च। पारमार्थिकदृष्ट्याऽग्निशब्दस्यात्र मुख्योऽर्थः परमात्मैव, **यस्तन्न वेद किमृचा करिष्यति**। ऋ० १। १६४। ३९। **एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः**। ऋ० १।१६४।४६। **तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः**। य० ३२। १। **ब्रह्म ह्यग्निः**। श० १।४।२।११ इत्यादिप्रामाण्यात्। परमात्मातिरिक्तम् अग्निशब्दस्य परमार्थविषयाणि आत्ममनःप्राणवागादीन्यपि वाच्यानि भवितुमर्हन्ति। उक्तं च—आत्मैवाग्निः श० ६।७।१।२०। मन एवाग्निः। श० १०। १। २। ३। प्राणो वा अग्निः। श० ९।५।१।६८। वागेवाग्निः। श० ३।२।२।१३ इति। ज्ञानकर्मकाण्डदृष्ट्या पार्थिवाग्नि-विद्युत्-सूर्य-विद्वद्-नृप-सेनाधीशादयोऽर्था वाच्या व्यङ्ग्या वा भवन्ति। ते च श्लेषशब्दशक्त्युद्-भवध्वनि-लुप्तोपमा-अप्रस्तुतप्रशंसा-समासोक्तिप्रभृत्यलङ्कारमुखेन पृथक् स्वं स्वमभि-प्रायं बोधयन्तोऽपि परमात्मादिरूपं मुख्यार्थमेव संपुष्णन्ति।

अग्निशब्दं तावद् यास्काचार्य एवं निर्वक्ति—अग्निः कस्माद्? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते, अङ्गं नयति संनममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः, न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इताद् अक्ताद् दग्धाद् वा नीतात्। स खल्वेतेरकारमादत्ते, गकारमनक्तेर्वा दहतेर्वा, नी परः। निरु० ७।१४। अग्निशब्दवाच्यः परमात्मा हि सर्वेषामुपासकानामग्रणीः अग्रनायकः पथप्रदर्शक इति यावत्। स च सर्वेषु यज्ञेषु अग्निहोत्राद्यश्वमेधान्तेषु, अध्ययनाध्यापनादिषु, वापीकूपतडागोद्यान-चिकित्सालयादिनिर्माणरूपेषु, इतरेषु च परोपकारयज्ञेषु अग्रं प्रणीयते आदर्शरूपेण

---

१. केवलमधस्तनाः षडेव मन्त्रा भिन्नदैवताः सन्ति—५६ ब्रह्मणस्पतिः, ५७ यूपः, ७५ पूषा, ९१ विश्वेदेवाः, १०१ पवमानः सोमः, १०२ अदितिः। एता अपि देवता अग्निसम्बद्धत्वा-देवाग्नेये पर्वणि समाविष्टाः।

२. ज्ञानकर्मणोरुपासनायाश्च कियत्युन्नतिर्भवितुमर्हति, किञ्चैतेषां फलं भवति, सामवेद एतद्-विधायकत्वात् तृतीयो गण्यत इति दयानन्दः। ऋ० भा० भू०, प्रश्नोत्तरविषयः।

संमुखं स्थाप्यते । यं कं चोपासकं प्रति संनतो भवति तम् अङ्कं नयति आश्रयरूपे स्वक्रोडे स्थापयति । यद्वा, न क्नोपयति[1] नार्द्रीकरोति स्वोपासकं दुःखद्रवरसेन पापपङ्केन वा यः सोऽक्निः, अक्निरेव चाग्निः । यद्वा, एति क्रियाशीलो भवति स्वोपासकमुन्नेतुम्, अनक्ति संमार्ष्टि उपासकहृदयम्, दहति हृत्स्थं मालिन्यम्, नयति च लक्ष्यं प्रति[2] यः स परमात्मा अग्निपदेनोच्यते ।

अगि गतौ धातोरप्यग्निशब्दः सिध्यति[3] । गतेस्त्रयोऽर्था ज्ञानं गमनं प्राप्तिश्च । यः अङ्गति जानाति सर्वं, गच्छति सर्वत्र व्यापको भवति, प्राप्नोति च स्वोपासकान् संकटकाले, तस्मात् परमात्मा अग्निरुच्यते । किं च, पार्थिवाग्नि-विद्युदग्नि-सूर्याग्निवत् प्रकाशमानत्वात् प्रकाशकत्वाच्चापि परमात्मा रूपकातिशयो-क्तिमाश्रित्य अग्निनाम्ना स्मर्यते ।

अग्नेः कर्माणि निरुक्तकार एवमाह—**अथास्य कर्म । वहनं च हविषाम् आवाहनं च देवतानाम् । यच्च किञ्चिद् दार्ष्टिविषयिकम् अग्निकर्मैव तत् । निरु० ७।८ ।** यज्ञाग्निवत् परमात्माग्निरपि अध्यात्मयाजिभिर्हविष्कृत्वा हुतानि सर्वाणि ज्ञानकर्मादीनि वाक्चक्षुःश्रोत्रप्राणमनोबुद्ध्यादीनि च वहति स्वीकरोति, तेषां हृदयरूपे यज्ञस्थले देवान् दिव्यगुणान् आवाहयति, मानसं तमो निवार्य प्रकाशदृष्टिं च प्रयच्छति । तस्मात् परमात्मनोऽग्निरूपस्य चिन्तनं योगसाधकाय महत् कल्याणकरम् । अत एवाग्नेयपर्वणि परमात्माऽग्निरूपेण ध्यायते ।

**अथ** प्रथमे प्रपाठके प्रथमार्द्धे प्रथमा दशतिः, प्रथमाध्याये प्रथमः खण्डश्च प्रारभ्यते । प्रथमो गणनाप्रकारः कौथुमीयः, द्वितीयश्च राणायनीयः ।

**तत्र अग्न आयाहीति प्रथमाया दशतेः ऋषयः—१,२,४,७,९ भरद्वाजः; ३ मेधातिथिः, ५ उशनाः, ६ सुदीतिपुरुमीढौ तयोर्वान्यतरः, ८ वत्सः; १० वामदेवः। देवता-अग्निः। छन्दः—गायत्री। स्वरः—षड्जः।**

**तत्राद्ये मन्त्रेऽग्निनाम्ना परमात्मविद्वन्नृपादीनाह्वयन्नाह ।**

---

१. क्नूयी शब्दे उन्दे च । णिजन्तः ।

२. इण् गतौ धातोर्निष्पन्नाद् 'अयन' शब्दाद् 'अकारः' अञ्चू धातोर्निष्पिन्नाद् 'अक्त' शब्दाद्, दह धातोर्निष्पिन्नाद् 'दग्ध' शब्दाद् वा 'गकारः', णीञ् प्रापणे धातोः 'निः' । एवं त्रिभ्यो धातुभ्योऽग्निशब्दः सिद्ध्यतीति शाकपूणिमतम् ।

३. अगि धातोः 'अङ्गेर्नलोपश्च' उ० ४।५१ । इत्युणादिसूत्रेण निप्रत्ययः, धातोरिदित्वाज्जा-तस्य नुमो नकारस्य च लोपः ।

२ ३ १ २ ३ १ २ २ ३ ३ १ २
**१. अग्न आ याहि वीतये गृणानो हव्यदातये ।**
१र २र ३ १ २
**नि होता सत्सि बर्हिषि ॥ १ ॥**[1]

१ २र २ ३ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
**अग्ने आ याहि वीतये गृणानः हव्यदातये हव्य दातये नि**
१ २र ३ ३ ३ १ २
**होता सत्सि बर्हिषि ॥ १ ॥**

**अन्वितपदार्थ**[2]:—तत्र प्रथमः परमात्मपरः । हे (अग्ने) सर्वाग्रणीः, सर्वज्ञ, सर्वव्यापक, सर्वसुखप्रापक, सर्वप्रकाशमय, सर्वप्रकाशक परमात्मन् ! त्वम् (गृणानः) पापानि निगिरन् कर्तव्यानि चोपदिशन् । गॄ निगरणे, गॄ शब्दे, शानच्, व्यत्ययेनात्मनेपदम् । (वीतये) अस्माकं प्रगतये, अस्माकं विचारेषु कर्मसु च व्याप्तये, हृदयेषु सद्गुणानां प्रजननाय, अस्मासु स्नेहितुम्, कामक्रोधादीनां च बहिःप्रक्षेपणाय खादनाय वा । वी गति-व्याप्ति-प्रजन-कान्ति, असन-खादनेषु इत्यस्मात् 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः अ० ३।३।९६ अनेन क्तिन् प्रत्यय उदात्तत्वं च । (हव्यदातये) होतुं दातुं योग्यं द्रव्यं हव्यं सद्बुद्धि-सत्कर्मसद्धर्म-सद्धनादिकं तस्य दातये दानाय च ( आ याहि ) आगच्छ । (होता) शक्त्यादिप्रदाता दौर्बल्यादिहर्ता च सन् । हव्यम् इत्यत्र हु दानादनयोः आदाने च इति धातोर्यत् प्रत्ययः । होता इत्यत्र च तस्मादेव कर्तरि तृच् । ( बर्हिषि ) हृदयान्तरिक्षे । बर्हिरित्यन्तरिक्षनामसु पठितम् । निघं० १।३। ( नि सत्सि ) निषीद । षद्लृ विशरणगत्यवसादनेषु इति धातोर्लेट् । 'बहुलं छन्दसि' अ० २।४।७३ इति शपो लुकि सीदादेशाभावः । 'नि होता सत्सि' इति धातूपसर्गयोर्व्यवहितप्रयोगः 'व्यवहिताश्च' अ० १।४।८२ इति नियमेन छान्दसो बोध्यः ।

**अथ द्वितीयो** विद्वत्परः[3] । विद्वानप्यग्निरुच्यते 'अग्निर्विद्वान् ऋतचिद्धि सत्यः' । ऋ० १ । १४५ । ५ । 'अग्निः सनोति वीर्याणि विद्वान्' । ऋ० ३ । २५ । २ इत्यादिमन्त्र-प्रामाण्यात् । हे (अग्ने) विद्वन् ! त्वम् (गृणानः) यज्ञविधिं यज्ञलाभांश्चोपदिशन् यज्ञविघ्नांश्च निगिरन् (वीतये) यज्ञस्य प्रगतये (हव्यदातये) हविषां यज्ञाग्नौ दानाय च (आ याहि) आगच्छ । (होता) होमनिष्पादकः सन् (बर्हिषि) दर्भासने (नि सत्सि) निषीद । एवं यजमानानामस्माकं यज्ञं निरुपद्रवं सञ्चालयेत्यर्थः ।

---

१. ऋ० ६ । १६ । १० । साम ६६० ।

२. अग्रे प्रतिमन्त्रम् 'अन्वित' शब्दमनुल्लिख्य केवलं 'पदार्थः' इत्येव लेखिष्यते ।

३. दयानन्दर्षिणा ऋग्भाष्ये (ऋ० ६।१६।१०) मन्त्रोऽयं विद्वत्पर एव व्याख्यातः—"(अग्ने) विद्वन् ! (आ याहि) आगच्छ (वीतये) विद्यादिशुभगुणव्याप्तये (गृणानः) स्तुवन् (हव्य-दातये) दातव्यदानाय (नि) (होता) दाता (सत्सि) समवैषि (बर्हिषि) उत्तमायां सभा-याम् ।" इत्यादि ।

अथ **तृतीयो** राजपरः। राजाप्यग्निरुच्यते, 'अग्निर्होता गृहपतिः स राजा।' ऋ० ६।१५।१३ इत्यादिप्रामाण्यात्। हे (अग्ने) अग्रणीः राजन्! त्वम् (गृणानः) राजनियमान् शब्दयन् घोषयन् (वीतये) राष्ट्रस्य प्रगतये, स्वप्रभावेन प्रजासु व्याप्तये, प्रजासु राष्ट्रियभावनाया विद्यान्यायादीनां च प्रजननाय, आभ्यन्तराणां बाह्यानां च शत्रूणां निरसनाय वा (हव्यदातये) राष्ट्रहितार्थं देहं मनो राजकोषादिकं वा सर्वं किञ्चिद् हव्यं कृत्वा तस्य दातये उत्सर्जनाय च (आ याहि) आगच्छ। (होता) राष्ट्रयज्ञस्य निष्पादकः सन् (बर्हिषि) राज्यासने राजसभायां वा (नि सत्सि) निषीद।

अथ **चतुर्थो** सूर्याग्निपरः। सूर्योऽप्यग्निरुच्यते। 'स न मन्येत, अयमेवाग्निरिति। अप्येते उत्तरे ज्योतिषी अग्नी उच्येते। नि० ७।१७। इति निरुक्तप्रामाण्यात्। हे (अग्ने) सौरलोकनायक सूर्य! त्वम् (गृणानः) तमांसि निगिरन् (वीतये) चराचरेषु गतिप्रदानाय, स्व किरणैः सर्वत्र ग्रहोपग्रहादिषु व्याप्तये वृक्षवनस्पत्यादीनां प्रजननाय रोगादीनां च प्रक्षेपणाय खादनाय वा, (हव्यदातये) हव्यानां देयानां तापप्रकाशाहोरात्रादीनां दानाय च (आ याहि) आगच्छ। (होता) भौमस्य समुद्रादिवर्तिनो जलस्य हर्ता पुनश्च वर्षणेन तत्प्रदाता च सन् (बर्हिषि) आकाशे (नि सत्सि) निषीद।

अचेतनेऽपि चैतन्यारोपाच्चेतनवद् व्यवहारः काव्यसम्प्रदायप्रसिद्धः। तेन सूर्यपक्षेऽपि 'आयाहि'. 'निषत्सि' इत्यादिप्रयोगाः संगच्छन्ते। सूर्याग्निः वीतये हव्यदातये च आयाति, होता सन् बर्हिषि निषीदति चेत्याशयः। तदेव दयानन्दर्षिणा स्ववेदभाष्ये सर्वत्र व्यत्ययमुखेन प्रतिपादितम्। अत्र निरुक्तमपि 'यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीति, अचेतनान्यप्येवं स्तूयन्ते, यथाक्षप्रभृतीनि ओषधिपर्यन्तानि' इत्यादि। निरु० ७।७। एवमग्रेऽप्यचेतनेषु चेतनवद् व्यवहारः समाधेयः।

अथ **पञ्चमो** यज्ञाग्निपरः। हे (अग्ने) यज्ञवह्ने! (गृणानः) मन्त्रपाठद्वारा ऽस्माभिः स्तूयमानः[1] त्वम् (वीतये) हविषां भक्षणाय, (हव्यदातये) हव्यानां हुतानां सुगन्धिमिष्टपुष्टरोगनाशकगुणैर्युक्तानां हविषां दातये सूक्ष्मीकृत्य प्रसारणाय च (आ याहि) आगच्छ। (होता) हुतद्रव्याणाम् आदाता आरोग्यादीनां प्रदाता च सन् (बर्हिषि) यज्ञवेद्या अन्तरिक्षे (नि सत्सि) निषीद। अत्राप्यचेतने यज्ञाग्नौ चेतनवद् व्यवहार आलङ्कारिकः।

अथ **षष्ठः** शिल्पाग्निपरः। हे (अग्ने) शिल्पयज्ञेषु प्रयुज्यमान पार्थिवाग्ने! त्वम् (गृणानः) गुणवर्णनद्वारा स्तूयमानः सन् (वीतये) अग्निरथानाम् इतरेषां च

---

१. गृणानः स्तूयमानः—इति विवरणकारः। गृणानः स्तूयमानः, गृणातेः 'भावकर्मणोः (पा० १।३।१३) इत्यात्मनेपदम्। यक्स्थाने श्नाप्रत्ययो व्यत्ययेन छान्दसः। गृणाना जमदग्निना। ऋ० ३।६२।१८' इति हि भवति—इति भरतस्वामी। गृणानः अस्माभिः स्तूयमानः—इति सायणः।

यन्त्राणां संचालनाय, ( हव्यदातये ) व्यापारद्वारा यन्त्रद्वारा वा दातव्यपदार्थानां दानाय च (आ याहि) आगच्छ। (होता) शिल्पयज्ञेन विविधपदार्थानां सुखानां च दाता सन् ( बर्हिषि ) उदके, उदकसमीपे इत्यर्थः। बर्हिरित्युदकनाम। निघं १।१२। (नि सत्सि) यानेषु यन्त्रेषु च निषीद। अग्निजलयोः संयोगेन वाष्पं जनयित्वा तेन यानानि यन्त्राश्च संचाल्यन्तामिति भावः। अत्राप्यचेतने शिल्पाग्नौ चेतनवद् व्यवहारः पूर्ववदालङ्कारिकः।

अत्र प्रथमे मन्त्रे विद्वन्नृपसूर्ययज्ञाग्निशिल्पाग्नीनां गुणवर्णनाद् ज्ञानकाण्डं, विदुषो नृपस्य च कर्तव्यवर्णनात् कर्मकाण्डं, परमेश्वरस्योपासनावर्णनाच्चोपासनाकाण्डं विज्ञेयम्। अग्रे प्रतिमन्त्रं विविधा अर्था न निरूपयिष्यन्ते, किन्तु पारमार्थिका एवार्था प्रायेण प्रकाशयिष्यन्ते। एकाधिकानर्थान् क्वचित् क्वचिदेव व्याख्यास्यामः।

अत्र श्लेषालङ्कारः। उपमानोपमेयभावश्च द्योत्यते। वीति-हव्यदातिक्रिययोः आयान-निषदनक्रिययोश्चाग्निरूपैककारकसम्बन्धाद् दीपकालङ्कारोऽपि। 'तये-तये' इति निरर्थकयोर्द्वयोः स्वरव्यञ्जनसंहत्योरावर्तनाद् यमकम्। यकारस्य तकारस्य चासकृदावर्तनाद् वृत्त्यनुप्रासः। आद्ययोर्द्वयोः पादयोरन्ते ये-ये इत्यावर्तनाद् अन्त्यानुप्रासोऽपि। इति दिक् ॥ १ ॥

**भावार्थः**—यथा विद्वान् पुरोहितो यज्ञासने स्थित्वा यज्ञं संचालयति, यथा राजा राजसभायां स्थित्वा राष्ट्रमुन्नयति, यथा सूर्याग्निराकाशे स्थितः सन् जगन्मङ्गलं वितनुते, यथा यज्ञाग्निर्यज्ञवेद्यां स्थितो हविर्गन्धेन रोगान् निवारयति, यथा च शिल्पाग्निर्जलेन सह यानेषु यन्त्रेषु च स्थितो वाष्पद्वारा यानानि यन्त्राश्च चालयति, तथैव परमात्माग्निरस्माकं हृदयान्तरिक्षे स्थित्वास्माकं महत् कल्याणं कर्तुं शक्नोतीत्यसौ सर्वैराह्वातव्यः। सर्वेषां जनानां हृदये पूर्वमेव विराजमानोऽपि परमात्मा जनैर्विस्मृतत्वादविद्यमानकल्प इति पुनरप्याहूयते। सर्वे जनाः स्वहृदि तस्य सत्तामनुभवेयुः, ततः सत्कर्मसु प्रेरणां च गृह्णीयुरित्याशयः ॥ १ ॥

अब सामवेद का भाष्य आरंभ करते हैं। उसमें प्रथम पूर्वाचिक (छन्द आर्चिक) है। उसमें भी सर्वप्रथम आग्नेय पर्व या काण्ड की व्याख्या करनी है। आग्नेय पर्व में कुल ११४ मन्त्र हैं, जिनका प्रायः अग्नि ही देवता है। अग्नि देवता वाला होने से ही इस काण्ड का आग्नेय नाम पड़ा है। ज्ञानकाण्ड, कर्मकाण्ड और उपासना के चरम उत्कर्ष का वर्णन तथा ज्ञान और कर्म की उपासना में परिणति ही सामवेद का विषय है। वेदों के दो प्रकार के अर्थ होते हैं, पारमार्थिक और व्यावहारिक। पारमार्थिक दृष्टि से अग्नि शब्द का यहां मुख्य अर्थ परमात्मा ही है। इसमें प्रमाण भी हैं—जिसने वेदमन्त्रों के प्रतिपाद्य परमात्मा को नहीं जाना, वह वेदमन्त्रों से क्या लाभ उठा सकेगा।' ऋ. १।१६४।३९। 'एक ही परमात्मा को ज्ञानी जन अग्नि, यम, मातरिश्वा आदि अनेक नामों से पुकारते हैं। ऋ. १।१६४।४६'। 'उसी परमात्मा का नाम अग्नि है, आदित्य है, वायु है, चन्द्रमा है। य. ३२।१।' 'ब्रह्म ही

अग्नि है। श. १।४।२।११।' आदि। परमात्मा के अतिरिक्त परमार्थ विषय में अग्नि शब्द के आत्मा, मन, प्राण, वाणी आदि भी वाच्यार्थ हो सकते हैं। शतपथ 'ब्राह्मण में कहा भी है—'आत्मा ही अग्नि है। श. ६।७।१।२०।' 'मन ही अग्नि है। श. १०।१।२।३।' प्राण ही अग्नि है। श. ९।५।१।६८। 'वाणी ही अग्नि है। श. ३।२।२।१३।' ज्ञानकाण्ड और कर्मकाण्ड की दृष्टि से अथवा व्यावहारिक दृष्टि से पार्थिव अग्नि, बिजली, सूर्य, विद्वान् पुरुष, राजा, सेनापति आदि अग्नि शब्द के वाच्यार्थ या व्यङ्ग्यार्थ होते हैं। वे श्लेष, शब्दशक्त्युद्भव ध्वनि, लुप्तोपमा, अप्रस्तुतप्रशंसा, समासोक्ति आदि अलंकारों के द्वारा पृथक् अपने अभिप्राय का बोध कराते हुए भी परमात्मा आदि रूप मुख्यार्थ को ही परिपुष्ट करते हैं।

अग्नि शब्द का यास्काचार्य ने निरुक्त (७।१४) में जो निर्वचन दिखाया है उसके अनुसार अग्नि शब्द 'अग्र-नी' या 'अंग-नी' से निष्पन्न होता है। परमात्मा का नाम अग्नि इस कारण है, क्योंकि वह उपासकों का अग्र-णी अर्थात् अग्र-नायक या पथप्रदर्शक बनता है और वह अग्निहोत्र से लेकर अश्वमेध-पर्यन्त यज्ञों में या अध्ययन-अध्यापन-रूप यज्ञों में अथवा सार्वजनिक बावड़ी, कुआं, तालाब, उद्यान, चिकित्सालय आदि के निर्माण रूप यज्ञों में तथा अन्य परोपकार के यज्ञों में आदर्श रूप में सबसे आगे लाया जाता है (अग्र-नी)। वह जिस उपासक के अनुकूल होता है, उसे अपने अंग में अर्थात् अपनी आश्रय रूप गोदी में ले लेता है (अंग-नी)। निरुक्त के अनुसार स्थौलाष्ठीवि आचार्य 'न' पूर्वक गीला करने अर्थ वाली क्नूयी धातु से अग्नि शब्द की सिद्धि करते हैं। जो दुःख-द्रव से या पाप-पंक से अपने उपासक को गीला नहीं होने देता, वह परमात्मा अग्नि है (न-क्नि=अग्नि)। निरुक्त में उद्धृत शाकपूणि आचार्य के मत में अग्नि शब्द तीन धातुओं से मिला कर बना है। अग्नि का अ गत्यर्थक इण् धातु के 'अयन' से लिया गया है, क् या ग् मांजने अर्थ वाली अञ्जू धातु के 'अक्त' से या दाहार्थक 'दह' धातु के 'दग्ध' से लिया है और नि नयनार्थक नी (णीञ् प्रापणे) से गृहीत किया गया है। परमात्मा अग्नि इस कारण है, क्योंकि वह अपने उपासक को उन्नत करने में गतिशील या सक्रिय होता है, उपासक के हृदय को मांज कर स्वच्छ कर देता है, हृदय-स्थित मालिन्य को दग्ध करता है और उसे उसके निर्धारित लक्ष्य पर पहुंचा देता है।

उणादि प्रक्रिया के अनुसार अग्नि शब्द की सिद्धि गत्यर्थक 'अगि' धातु से होती है। गति के तीन अर्थ होते हैं—ज्ञान, गमन और प्राप्ति। जो सर्वज्ञ है, सर्वगत अर्थात् सर्वव्यापक है और संकट काल में अपने उपासकों को प्राप्त होने वाला है, उस परमात्मा का नाम अग्नि है। परमात्मा को अग्नि एक अन्य हेतु से भी कह सकते हैं। पार्थिव अग्नि, बिजली रूप अग्नि और सूर्यरूप अग्नि के समान प्रकाशमान और प्रकाशक होने से रूपकातिशयोक्ति अलंकार का आश्रय लेकर उसे साक्षात् अग्नि ही कह दिया जाता है।

अग्नि के कर्म बताते हुए निरुक्तकार ने कहा है कि "अग्नि हवियों का वहन करता है, देवताओं का आवाहन करता है और जो दर्शनविषयक प्रकाश-प्रदान आदि का कर्म है वह भी अग्नि का ही है (निरु. ७।८)।" यज्ञाग्नि के समान परमात्मा-रूप अग्नि भी इन कर्मों को करता है। वह अध्यात्मयाजियों द्वारा हवि रूप में समर्पित किये हुए सब ज्ञान, कर्म आदियों को तथा वाक्, चक्षु, श्रोत्र, प्राण, मन, बुद्धि आदियों को वहन अर्थात् स्वीकार करता

है, हृदय-रूप यज्ञस्थल में देवों अर्थात् दिव्य गुणों का आवाहन करता है और मन की तामसिकता का निवारण कर प्रकाशदृष्टि प्रदान करता है। इस कारण परमात्मा के अग्नि-रूप का चिन्तन योगसाधक के लिए महान् कल्याण करने वाला होता है। इसीलिए आग्नेय पर्व में परमात्मा का अग्नि रूप से ध्यान किया गया है।

अब कौथुमीय गणनाप्रकार के अनुसार प्रथम प्रपाठक, प्रथम अर्ध की प्रथम दशति प्रारंभ होती है। राणायनीय गणनाप्रकार से प्रथम अध्याय का प्रथम खण्ड प्रारंभ होता है।

प्रथम मन्त्र में अग्नि नाम से परमात्मा, विद्वान्, राजा आदि का आह्वान करते हुए कहते हैं।

**अन्वित पदार्थ—प्रथम** अर्थ, परमात्मा पक्ष में। हे (अग्ने) सर्वाग्रणी, सर्वज्ञ, सर्वव्यापक, सर्वसुखप्रापक, सर्वप्रकाशमय, सर्वप्रकाशक परमात्मन्! आप (गृणानः) पापों को निगलते हुए और कर्तव्यों का उपदेश करते हुए (वीतये) हमारी प्रगति के लिए, हमारे विचारों और कर्मों में व्याप्त होने के लिए, हमारे हृदयों में सद्गुणों को उत्पन्न करने के लिए, हमसे स्नेह करने के लिए, हमारे अन्दर उत्पन्न काम, क्रोध आदि को बाहर फेंकने के लिए या खा जाने के लिए, और (हव्य-दातये) देय पदार्थ श्रेष्ठ बुद्धि, श्रेष्ठ कर्म, श्रेष्ठ धर्म, श्रेष्ठ धन आदि के दान के लिए (आ याहि) आइये। (होता) शक्ति आदि के दाता एवं दुर्बलता आदि के हर्ता होकर (बर्हिषि) हृदय-रूप अन्तरिक्ष में (नि सत्सि) बैठिए।

**द्वितीय** अर्थ, विद्वान्-पक्ष में। विद्वान् भी अग्नि कहलाता है। इसमें **'विद्वान् अग्नि है, जो ऋत का संग्रहीता और सत्यमय होता है।'** ऋ. १।१४५।५।' **'विद्वान् अग्नि है, जो बल प्रदान करता है।'** ऋ. ३।२५।२।' इत्यादि मन्त्र प्रमाण हैं। हे (अग्ने) विद्वन्! आप (गृणानः) यज्ञविधि और यज्ञ के लाभों का उपदेश करते हुए और यज्ञ के विघ्नों को निगलते हुए (वीतये) यज्ञ को प्रगति देने के लिए, और (हव्य-दातये) हवियों को यज्ञाग्नि में देने के लिए (आ याहि) आइये। (होता) होम के निष्पादक होकर (बर्हिषि) कुशा से बने यज्ञासन पर (नि सत्सि) बैठिए। इस प्रकार हम यजमानों के यज्ञ को निरुपद्रव रूप से संचालित कीजिए।

**तृतीय** अर्थ, राजा-पक्ष में। राजा भी अग्नि कहलाता है इसमें **'राजा अग्नि है, जो राष्ट्ररूप गृह का अधिपति और राष्ट्रयज्ञ का ऋत्विज् होता है।'** ऋ. ६।१५।१३।' इत्यादि प्रमाण है। हे (अग्ने) अग्रनायक राजन्! आप (गृणानः) राजनियमों को घोषित करते हुए (वीतये) राष्ट्र को प्रगति देने के लिए, अपने प्रभाव से प्रजाओं में व्याप्त होने के लिए, प्रजाओं में राष्ट्र-भावना और विद्या, न्याय आदि को उत्पन्न करने के लिए तथा आन्तरिक और बाह्य शत्रुओं को परास्त करने के लिए, और (हव्य-दातये) राष्ट्रहित के लिए देह, मन, राजकोष आदि सर्वस्व को हवि बना कर उसका उत्सर्ग करने के लिए (आ याहि) आइये। (होता) राष्ट्रयज्ञ के निष्पादक होकर (बर्हिषि) राज-सिंहासन पर या राजसभा में (नि सत्सि) बैठिए।

**चतुर्थ अर्थ**, सूर्याग्नि-पक्ष में। सूर्य भी अग्नि कहलता है। इसमें निरुक्त का यह वचन प्रमाण है—'**वेद का पाठक यह न समझे कि पार्थिव अग्नि को ही अग्नि कहते हैं अपितु वे उपरली ज्योतियां अर्थात् आकाशीय विद्युत् और सूर्य भी अग्नि कहाते हैं**। निरु. ७। १७। हे (अग्ने) सौर लोक के नायक सूर्य ! तू (गृणानः) अंधकारों को निगलता हुआ (वीतये) चराचर को गति देने के लिए, अपनी किरणों से सर्वत्र ग्रह-उपग्रह आदियों में व्याप्त होने के लिए, वृक्ष-वनस्पति आदि की उत्पत्ति के लिए और रोग आदियों को परे फेंकने या खा जाने के लिए, और (हव्य-दातये) दातव्य ताप, प्रकाश, दिन-रात आदि के दान के लिए (आ याहि) आ। (होता) समुद्र आदि में विद्यमान पार्थिव जल का हर्ता और वर्षा द्वारा प्रदाता होकर (बर्हिषि) आकाश में (नि सत्सि) स्थित रह।

अचेतन में चैतन्य का आरोप करके चेतन के समान व्यवहार करना काव्य-सम्प्रदाय में प्रसिद्ध है। अतः अचेतन सूर्य के पक्ष में भी 'आ', 'स्थित रह' इत्यादि प्रयोग संगत हैं। आशय यह है कि सूर्य-रूप अग्नि गति आदि के प्रदान के लिए और दातव्य ताप, प्रकाश आदि के दान के लिए उदित होता है तथा जल का हर्ता और वृष्टिप्रदाता होकर आकाश में स्थित होता है, सूर्य की इस महिमा को हम जानें। इसी बात को ऋषि दयानन्द ने अपने वेदभाष्य में सर्वत्र व्यत्यय के द्वारा प्रतिपादित किया है। इस विषय में निरुक्त का वह प्रसंग भी द्रष्टव्य है जहां यह विचार किया गया है कि वेद के देवता चेतन हैं या अचेतन हैं। चेतनवादियों ने एक यह युक्ति दी है कि सब देवता चेतन हैं, क्योंकि चेतनों के समान वेद में उनकी स्तुति की गयी है। इस पर दूसरे पक्ष ने यह कहा है कि चेतनों के समान स्तुति तो अचेतनों की भी होती है, जैसे अक्ष (जुए के पासों) से लेकर ओषधि पर्यन्त जो रथ, दुन्दुभि, इषुधि (तरकस), धनुष, उलूखल (ऊखल) आदि नाम पठित हैं, वे प्रायः अचेतन हैं, तो भी उनकी वेद में चेतन के समान स्तुति मिलती है।[1] (निरु. ७।७)। अर्थात् यह वेद की एक वर्णन-शैली है। आगे भी अचेतनों में जहाँ चेतनवत् व्यवहार वर्णित हो, उसका इसी प्रकार समाधान कर लेना चाहिए।

**पांचवां अर्थ**, यज्ञाग्नि-पक्ष में। हे (अग्ने) यज्ञाग्नि ! (गृणानः) मन्त्रपाठ द्वारा हमसे गुण-वर्णन-रूप स्तुति किया जाता हुआ तू (वीतये) हवियों के भक्षण के लिए, तथा (हव्यदातये) आहुति दिये हुए सुगन्धित, मिष्ट, पुष्टिकारक और रोगनाशक हव्य पदार्थों को सूक्ष्म करके वायु-मंडल में फैलाने के लिए (आ याहि) आ, अर्थात् हम तुझे लायें। (होता) होम किये गये द्रव्यों को ग्रहण करने वाला तथा आरोग्य आदि का प्रदाता होकर (बर्हिषि) यज्ञवेदि के आकाश में (नि सत्सि) स्थित हो, अर्थात् हम यज्ञवेदि में अग्न्याधान करें। यहां भी अचेतन यज्ञाग्नि में चेतन के समान व्यवहार आलंकारिक है।

**छठा अर्थ**, शिल्पाग्नि-पक्ष में। हे (अग्ने) शिल्पयज्ञों में प्रयुक्त की जाने वाली पार्थिव

---

१. जैसे '**वनस्पते वीड्वङ्गो हि भूयाः। ऋ. ६।४७।२६**' अर्थात् हे रथ ! तू दृढ अंगों वाला हो। '**उपश्वासय पृथिवीमुत द्याम्। ऋ. ६।४७।२९**', अर्थात् हे दुन्दुभि ! तू भूमि और आकाश को गुंजा दे। '**यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे। ऋ. १।२८।५**', अर्थात् हे ऊखल ! जो तू घर-घर में प्रयुक्त होता है। आदि।

अग्नि ! (गृणानः) गुण-वर्णन की जाती हुई तू (वीतये) अग्नि-रथों को तथा अन्य यन्त्रों को चलाने के लिए, और (हव्यदातये) व्यापार द्वारा तथा यन्त्रों द्वारा प्राप्त होने वाले दातव्य पदार्थों के दान के लिए (आ याहि) आ। (होता) शिल्पयज्ञ द्वारा विविध पदार्थों और सुखों का दाता होकर (बर्हिषि) जल के समीप (नि सत्सि) यानों और यन्त्रों में नीचे स्थित हो। अभिप्राय यह है कि अग्नि और जल के संयोग से भाप उत्पन्न करके उससे यानों को तथा अन्य यन्त्रों को हम चलायें। यहां भी अचेतन शिल्पाग्नि में चेतन के समान व्यवहार आलंकारिक है।

यहां प्रथम मन्त्र में विद्वान्, राजा, सूर्य, यज्ञाग्नि तथा शिल्पाग्नि के गुणों का वर्णन होने से ज्ञानकाण्ड, विद्वान् और राजा के कर्तव्य कर्मों का वर्णन होने से कर्मकाण्ड और परमात्मा की उपासना का वर्णन होने से उपासनाकाण्ड जानना चाहिए। आगे प्रत्येक मन्त्र की व्याख्या में विविध अर्थों का निरूपण नहीं किया जायेगा, किन्तु प्रायः पारमार्थिक अर्थ ही दिखाये जायेंगे। एक से अधिक अर्थों का कहीं-कहीं ही व्याख्यान करेंगे।

इस मन्त्र में श्लेषालंकार है। उपमानोपमेय भाव व्यङ्ग्य है। वीति और हव्यदाति क्रियाओं का तथा आने और बैठने की क्रियाओं का अग्नि रूप एक कारक से सम्बन्ध होने के कारण दीपक अलंकार भी है 'तये-तये' इन निरर्थक दो स्वर-व्यंजन-समुदायों की आवृत्ति के कारण यमक अलंकार है। यकार और तकार की पृथक्-पृथक् कई बार आवृत्ति होने से वृत्त्यनुप्रास है। आदि के दोनों पादों के अन्त में 'ये' आने के कारण अन्त्यानुप्रास भी है। इस दिशा से मन्त्रों में अलंकार-विचार तथा अलंकारों के संसृष्टि व संकर का विचार किया जा सकता।

**भावार्थ**—जैसे विद्वान् पुरोहित यज्ञासन पर बैठ कर यज्ञ को संचालित करता है, जैसे राजा राजसभा में बैठकर राष्ट्र की उन्नति करता है, जैसे सूर्यरूप अग्नि आकाश में स्थित होकर जगत् का कल्याण करता है, जैसे यज्ञाग्नि यज्ञवेदि में स्थित होकर हवियों की सुगन्ध से रोगों का निवारण करता है और जैसे शिल्पाग्नि जल के साथ यानों और यन्त्रों में स्थित होकर यानों तथा यन्त्रों को चलाता है, वैसे ही परमात्मा रूप अग्नि हमारे हृदयान्तरिक्ष में स्थित होकर हमारा महान् कल्याण कर सकता है, इसलिए सबको उसका आह्वान करना चाहिए। सब लोगों के हृदय में परमात्मा पहले से ही विराजमान है, तो भी लोग क्योंकि उसे भूले रहते हैं, इस कारण वह उनके हृदयों में न होने के बराबर है। इसलिए उसे पुनः बुलाया जा रहा है। आशय यह है कि सब लोग अपने हृदय में उसकी सत्ता का अनुभव करें और उससे सत्कर्म करने की प्रेरणा ग्रहण करें॥ १॥

**स परमात्मैव सर्वेषां यज्ञानां होतास्तीत्युच्यते।**

**२. त्वमग्ने यज्ञानां होता विश्वेषां हितः।**
**देवेभिर्मानुषे जने॥२॥**[1]

१. ऋ० ६।१६।१। साम० १४४७

२ ३ ३ १ २ १ २र १ २र ३ २
त्वम् अग्ने यज्ञानाम् होता विश्वेषाम् हितः
३ १ २ १ २र १ २र
देवेभिः मानुषे जने ॥२॥

**पदार्थः**—हे (अग्ने) परमात्मन् ! (त्वम्) अतिशयमहिमान्वितः (विश्वेषाम्) सर्वेषाम् (यज्ञानाम्) उपासकैः क्रियमाणानां ध्यानयज्ञानाम् (होता) निष्पादकः ऋत्विग् असि, अतः (देवेभिः) देवैः विद्वद्भिः। विद्वांसो हि देवाः। श० ३।७।३।१०। अत्र 'बहुलं छन्दसि' अ० ७।१।१० इति भिस ऐस् भावो न। (मानुषे) मनुष्यसम्बन्धिनि (जने) लोके (हितः) स्थापितः प्रचारितो भवसि। अत्र धा धातोर्निष्ठायां 'दधातेर्हिः' अ० ७।४।४२ इति हिभावः। ॥ २ ॥

**भावार्थः**—श्लेषेण सूर्यपक्षेऽपि योजनीयम्। यथा सूर्यः सौरलोके सर्वेषाम् अहोरात्र-पक्ष-मास-ऋत्वयन-संवत्सरादियज्ञानां निष्पादको वर्तते, तथैव परमात्माऽप्यध्यात्ममार्गावलम्बिभिर्जनैरनुष्ठीयमानान् सर्वानन्तर्यज्ञान् निष्पाद्य तान् योगिनो जनान् कृतार्थयति। यथा च सूर्यो देवैः प्रकाशकैः स्वकीयैः किरणैर्मानुषे लोके पृथिव्यां निहितो जायते, तथैव परमात्मा देवैर्विद्वद्भिर्मनुष्यलोके प्रचार्यते। अत्र परमात्मा सूर्य इवेत्युपमाध्वनिः ॥ २ ॥

वह परमात्मा ही सब यज्ञों का निष्पादक है, यह कहते हैं।

**पदार्थ**—हे (अग्ने) परमात्मन् ! (त्वम्) आप (विश्वेषाम्) सब (यज्ञानाम्) उपासकों से किये जाने वाले ध्यानरूप यज्ञों के (होता) निष्पादक ऋत्विज् हैं, अतः (देवेभिः) विद्वानों के द्वारा (मानुषे) मनुष्यों के (जने) लोक में (हितः) स्थापित अर्थात् प्रचारित किये जाते हैं ॥ २ ॥

**भावार्थ**—श्लेष द्वारा सूर्यपक्ष में भी योजना करनी चाहिए। जैसे सूर्य सौर लोक में सब अहोरात्र, पक्ष, मास, ऋतु, दक्षिणायन, उत्तरायण, वर्ष आदि यज्ञों का निष्पादक है, वैसे ही परमात्मा भी अध्यात्ममार्ग का अवलंबन करने वाले जनों से किये जाते हुए सब आंतरिक यज्ञों को निष्पन्न करके उन योगी जनों को कृतार्थ करता है। और जैसे सूर्य अपनी प्रकाशक किरणों से मनुष्य-लोक में अर्थात् पृथिवी पर निहित होता है, वैसे ही परमात्मा विद्वानों से मनुष्य-लोक में प्रचारित किया जाता जाता है। यहां 'परमात्मा सूर्य के समान है' यह अर्थ द्योतित होने से उपमा ध्वनि है ॥ २ ॥

**स परमात्माऽस्माभिर्दूतत्वेन वरणीय इत्याह।**

३ २ ३ १ २ ३ १ २ ३ १ २
**३. अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।**
३ २ ३ १ २ ३ १ २
**अस्य यज्ञस्य सुक्रतुम् ॥३॥**[1]

१. ऋ. १। १२। १। साम ७९०। अथर्व २०। १०१। १

३ २ ३२ ३ १२र ३ १२
**अग्निम् दूतम् वृणीमहे होतारम् विश्ववेदसम्**
३ २ ३ ३ २ ३१ २ ३१२ ३ १२र
**विश्व वेदसम् अस्य यज्ञस्य सुक्रतुम् सु क्रतुम् ॥३॥**

**पदार्थः**—वयम् (होतारम्) दिव्यगुणानाम् आह्वातारम् होतारं ह्वातारम् इति निरुक्तम् ७।१५। अत्र ह्वेञ् धातोस्तृन्, 'बहुलं छन्दसि' अ० ६।१।३४ इति सम्प्रसारणम् । (विश्ववेदसम्) विश्वं वेत्ति जानातीति विश्ववेदाः सर्वज्ञः, यद्वा विश्वस्मिन् विद्यते यः स विश्ववेदाः सर्वव्यापकः, यद्वा विश्वं वेदः आध्यात्मिकं भौतिकं च धनं यस्मात् स विश्ववेदाः, तम् विद ज्ञाने । विद सत्तायाम् । वेद इति धननाम । निघं. २।१०। किञ्च, ( अस्य ) एतस्य अनुष्ठीयमानस्य ( यज्ञस्य ) अध्यात्मयागस्य ( सुक्रतुम् ) सुकर्माणं सुसञ्चालकम् ऋत्विग्रूपम् । क्रतुरिति कर्मनाम । निघं० २।१। अत्र सोरुत्तरः क्रतुशब्दः 'क्रत्वादयश्च' अ० ६।२।११८ इत्याद्युदात्तः । ( अग्निम् ) परमात्मानम् ( दूतं वृणीमहे ) दिव्यगुणावतारे दूतत्वेन स्वीकुर्मः ।।३।।

**भावार्थः**—यथा हि दूतत्वेन वृतः कश्चिज्जनोऽस्माकं सन्देशं प्रियजनसमीपं नीत्वा, प्रियजनस्य च सन्देशमस्मान् प्रति प्रापय्य तेनास्माकं समागमं कारयति, तथैव सत्याहिंसास्तेयब्रह्मचर्यापरिग्रहन्यायविद्याश्रद्धासुमतीत्यादिदिव्यगुणगणानामस्माकं च मध्ये दौत्यं विधाय परमात्माऽस्मान् प्रति दिव्यगुणानाह्वयतीत्यसौ सर्वैरेवोपासकैर्दूतत्वेन वरणीयः । अत्र विशेषणपदार्थानाम् अग्निवरणे हेतुत्वात् पदार्थहेतुकः काव्यलिङ्गालङ्कारः[1] ।।३।।

ऋग्वेदेऽयं मन्त्रो (ऋ० १।१२।१) दयानन्दर्षिणा कलायन्त्राणां प्रेरणहेतुर्यनिषु वेगादिक्रियानिमित्तं यो भौतिकोऽग्निस्तत्परो व्याख्यातः । तत्कृतः पदार्थः (अन्वयक्रमेण परिवर्तितः) भावार्थश्चात्र लिख्यते—

"वयं क्रियाचिकीर्षवो मनुष्याः ( अस्य ) प्रत्यक्षेण साध्यस्य (यज्ञस्य) शिल्पविद्यामयस्य ( सुक्रतुम् ) सुष्ठु शोभनाः क्रतवः क्रिया भवन्ति यस्मात् तम् ( विश्ववेदसम् ) शिल्पिनो विश्वानि सर्वाणि शिल्पादिसाधनानि विन्दन्ति यस्मात् तम् (होतारम्) यानेषु वेगादिगुणदातारम् ( दूतम् ) यो दावयति देशान्तरं पदार्थान् गमयति तम् । अत्र दुतनिभ्यां दीर्घश्च । उ० ३ । ८८ इति क्तप्रत्ययो दीर्घश्च । (अग्निम्) सर्वपदार्थच्छेदकम् भौतिकाग्निम् (वृणीमहे) स्वीकुर्महे ।

**भावार्थः**—ईश्वर आज्ञापयति—मनुष्यैरयं प्रत्यक्षाप्रत्यक्षेण प्रसिद्धाप्रसिद्धगुणद्रव्याणामुपर्य्यधो गमकत्वेन दूतस्वभावः शिल्पविद्यासंभावितकलायन्त्राणां प्रेरणहेतुर्यनिषु वेगादिक्रियानिमित्तम् अग्निः सम्यग् विद्यया सर्वोपकाराय संग्राह्यो, यतः सर्वाण्युत्तमानि सुखानि संभवेयुरिति ।"

---

१. हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते । सा. द. १०।६२

वह परमेश्वर हमारे द्वारा दूत रूप में वरण करने योग्य है यह कहते हैं ।

**पदार्थ**—हम (होतारम्) दिव्य गुणों का आह्वान करने वाले, (विश्ववेदसम्) विश्व के ज्ञाता, विश्व भर में विद्यमान तथा सब आध्यात्मिक एवं भौतिक धन के स्रोत, (अस्य) इस अनुष्ठान किये जा रहे (यज्ञस्य) अध्यात्म-यज्ञ के (सुक्रतुम्) सुकर्ता, सुसंचालक ऋत्विज्-रूप (अग्निम्) परमात्मा को (दूतं वृणीमहे) दिव्य गुणों के अवतरण में दूत रूप से वरते हैं ॥ ३ ॥

**भावार्थ**—जैसे दूत रूप वरा हुआ कोई जन हमारे संदेश को प्रियजन के समीप ले जाकर और प्रियजन के संदेश को हमारे पास पहुंचा कर उसके साथ हमारा मिलन करा देता है, वैसे ही सत्य, अहिंसा, अस्तेय, ब्रह्मचर्य, अपरिग्रह, न्याय, विद्या, श्रद्धा, सुमति इत्यादि दिव्य गुणों के और हमारे बीच में दूत बन कर परमात्मा हमारे पास दिव्य गुणों को बुला कर लाता है, इसलिए सब उपासकों को उसे दूत रूप में वरण करना चाहिए । इस मन्त्र में विशेषण पदों का अर्थ परमात्माग्नि के वरण में हेतु बन रहा है, इस कारण काव्यलिंग अलंकार है ॥ ३ ॥

ऋग्वेद में यह मन्त्र (ऋ. १ । १२ । १) ऋषि दयानन्द ने कलायन्त्रों का प्रेरक तथा यानों में वेग आदि क्रिया का निमित्त जो भौतिक अग्नि है उसके पक्ष में व्याख्यात किया है । उनका किया हुआ पदार्थ और भावार्थ यहां लिखा जा रहा है—

"**पदार्थ**—क्रिया करने की इच्छा करने वाले हम मनुष्य लोग (अस्य) इस प्रत्यक्ष सिद्ध करने योग्य (यज्ञस्य) शिल्पविद्यारूप यज्ञ की (सुक्रतुम्) जिससे उत्तम-उत्तम क्रिया सिद्ध होती है ऐसे, तथा (विश्ववेदसम्) जिससे कारीगरों को सब शिल्प आदि साधनों का लाभ होता है ऐसे, (होतारम्) यानों में वेग आदि को देने वाले, (दूतम्) पदार्थों को एक देश से दूसरे देश को प्राप्त कराने वाले (अग्निम्) सब पदार्थों को अपने तेज से छिन्न-भिन्न करने वाले भौतिक अग्नि को (वृणीमहे) स्वीकार करते हैं ।

**भावार्थ**—ईश्वर आज्ञा देता है—मनुष्यों को चाहिए कि प्रत्यक्ष वा अप्रत्यक्ष रूप से प्रसिद्ध तथा अप्रसिद्ध गुणों वाले पदार्थों को ऊपर-नीचे पहुंचाने के कारण दूत स्वभाव वाला, शिल्पविद्या से जो कलायन्त्र बनते हैं उनके चलाने में हेतु और विमान आदि यानों में वेग आदि क्रियाओं का देने वाला जो भौतिक अग्नि है उसे अच्छी प्रकार विद्या से सब सज्जनों के उपकार के लिए निरन्तर ग्रहण करें, जिससे सब उत्तम-उत्तम सुख हों ।"

**वृतः परमात्मा पापानि भृशं हन्यादिति प्रार्थ्यते ।**

३ २ ३ १ २ ३ १ २ ३ १ २
**४. अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया ।**
१ २ ३ १र २र
**समिद्धः शुक्र आहुतः ॥४॥**[1]

---

१. ऋ. ६ । १६ । ३४ । य. ३३ । ९ । साम १३९६ ।
दयानन्दर्षिणा 'अग्नि' शब्दाद् ऋग्वेदे विद्युद्रूपोऽग्निः, यजुर्वेदे च सूर्यादिरूपोऽग्निर्गृहीतः ।

३ २ ३ १ २ ३ ३ २ ३ १ २
**अग्निः वृत्राणि जङ्घनत् द्रविणस्युः विपन्यया**
१ २र २ ३ ३ २ १ २र २ ३
**समिद्धः सम् इद्धः शुक्रः आहुतः आ हुतः ॥४॥**

**पदार्थः**—(द्रविणस्युः) उपासकानां द्रविणः आध्यात्मिकं धनं बलं वा कामयमानः। द्रविणम् इति धननामसु बलनामसु च पठितम्। निघं० २।१०, २।९। एष शब्दः सकारान्तोऽपि वेदे प्रयुज्यते, यथा 'द्रविणोदाः' इत्यत्र। द्रविणः परेषां कामयते इति द्रविणस्युः। 'छन्दसि परेच्छायामिति वक्तव्यम्'। अ० ३।१।८ वा० इति परेच्छायां क्यच्। क्याच्छन्दसि' अ० ३।२।१७० इत्युप्रत्ययः। 'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति'। अ० ७।४।३६ इति सकारस्य रुत्वाभावो निपात्यते।[1] (अग्निः) तेजोमयः परमात्मा (विपन्यया) विशेषस्तुत्या। पनतिरर्चतिकर्मा निघं० ३।१४। पण व्यवहारे स्तुतौ च। (समिद्धः) संदीप्तः, (शुक्रः) ज्वलितः। शोचतिः ज्वलतिकर्मा। निघं० १।१६। (आहुतः) आत्माहुत्या परिपूजितः सन् (वृत्राणि) अध्यात्मप्रकाशाच्छादकानि पापानि। पाप्मा वै वृत्रः। श० ११।१।५।७। (जङ्घनत्) भृशं पुनः पुनर्हन्यात्। यङ्लुगन्ताद् हन्तेः लिङर्थे लेट्।

**भावार्थः**—यज्ञाग्निपक्षेऽपि योजनीयम्। याज्ञिकैर्जनैर्हविर्भिराहुतः समिद्धो यज्ञाग्निर्यथा रोगादीन् नितरां विनाशयति तथा परमात्माग्निर्योगाभ्यासिभिर्जनैर्हार्दिकस्तुत्या हृदये भूयो भूयः संदीपितः प्राणेन्द्रियात्ममनोबुद्ध्यादिहविर्भिराहुतः संस्तेषां पापविचारान् सर्वथा निर्मूलयति। अत्रोपमाध्वनिः॥४॥

वरण किया हुआ परमात्मा पापों को सर्वथा नष्ट कर दे, यह प्रार्थना करते हैं।

**पदार्थ**—(द्रविणस्युः) उपासकों को आध्यात्मिक धन और बल देने का अभिलाषी (अग्निः) तेजोमय परमात्मा (विपन्यया) विशेष स्तुति से (समिद्धः) संदीप्त, (शुक्रः) प्रज्वलित, और (आहुतः) आत्माहुति से परिपूजित होकर (वृत्राणि) अध्यात्म प्रकाश के आच्छादक पापों को (जङ्घनत्) अतिशय पुनः पुनः नष्ट कर दे।

**भावार्थ**—यज्ञाग्नि-पक्ष में भी योजना करनी चाहिए। याज्ञिक जनों द्वारा हवियों से आहुत प्रदीप्त यज्ञाग्नि जैसे रोग आदियों को निःशेष रूप से विनष्ट कर देता है, वैसे ही

---

१. द्रविणशब्दस्य द्रविणस्भावो निपात्यते इति काशिकावृत्तिः। सायणोऽप्यत्र क्यचि सुगागम इत्याह। 'द्रविणं धनं, स्यु प्रत्ययो मतुवर्थे, द्रविणवानित्यर्थः। अथवा द्रविणं हविर्लक्षणं धनम् तदिच्छुः द्रविणस्युः हविष्काम इत्यर्थः' इति विवरणकारः। 'द्रविणः धनम्, हविर्लक्षणं धनं कामयमानः।.........द्रविणःशब्दः सकारान्तश्च विद्यते' इति भरतस्वामी। 'द्रविणस्युः द्रविणो धनमिच्छति द्रविणस्यति ...हविर्लक्षणं धनमिच्छन्' इति य. ३३। ९ भाष्ये महीधरः। 'द्रविणस्युः आत्मनो द्रविण इच्छुः, इति ऋ. ६। १६। ३४ भाष्ये दयानन्दः। एवं भरतस्वामिमहीधरदयानन्दाः सकारान्तत्वेनैव व्याचख्युः।

परमात्मा रूप अग्नि योगाभ्यासी जनों के द्वारा हार्दिक स्तुति से बार-बार संदीप्त तथा प्राण, इन्द्रिय, आत्मा, मन, बुद्धि आदि की हवियों से आहुत होकर उनके पाप विचारों को सर्वथा निर्मूल कर देता है। यहां उपमा ध्वनित होती है ॥४॥

तं परमात्मानमहं स्तौमीत्याह।

**५. प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्।**
**अग्ने रथं न वेद्यम् ॥ ५ ॥**[1]

प्रेष्ठम् वः अतिथिम् स्तुषे मित्रम् मि त्रम् इव प्रियम्
अग्ने रथम् न वेद्यम् ॥ ५ ॥

**पदार्थः**—हे (अग्ने) अग्रणीः परमात्मन्! (प्रेष्ठम्) प्रियतमम्। प्रियशब्दाद् इष्ठनि 'प्रियस्थिर०' अ० ६।४।१५७ इति प्रियस्य प्रादेशः। (अतिथिम्) अभ्यागतम् (मित्रम् इव) सुहृदमिव (प्रियम्) प्रेमास्पदम्, (रथं न) यानमिव। अत्र 'न' इत्युपमार्थीयः। यथाह निरुक्तकारः—उपरिष्टादुपचारस्तस्य येनोपमिमीते इति। निरु० १।४। (वेद्यम्)[2] प्राप्यम्। विद्लृ लाभे इति धातोर्यत् प्रत्ययः। (वः)[3] त्वाम्। अत्र व्यत्ययेनैकवचनस्य बहुवचनम्। अहम् (स्तुषे) स्तौमि। ष्टुञ् स्तुतौ इत्यस्माल्लेटि 'सिब्बहुलं लेटि' अ० ३।१।३४ इति सिपि उत्तमैकवचने रूपम् ॥५॥

**भावार्थः**—अत्र 'मित्रमिव प्रियम्', 'रथं न वेद्यम्' इत्युभयत्रोपमालङ्कारः। प्रियत्ववेद्यत्वयोश्च स्तुतिं प्रति हेतुत्वात् काव्यलिङ्गमपि। अग्नौ अतिथित्वारोपाच्च रूपकम्। सुहृद् यथा सर्वेषां प्रियो भवति, तथोपासकानां परमात्मा प्रियः। किञ्च, रथो यथा गन्तव्यस्थानं गन्तुं लब्धव्यो भवति, तथैव परमात्मा प्रेयोमार्गस्य श्रेयोमार्गस्य च लक्ष्यम् ऐहिकपारलौकिकोत्कर्षम् अधिगन्तुं सर्वैः प्राप्तव्यः स्तोतव्यश्च। अपिच, हृत्प्रदेशे विद्यमानः परमात्मा साक्षात् गेहं समायातः प्रेष्ठोऽतिथिरेव। अतः सोऽतिथिवत् सत्करणीयः ॥५॥

---

१. ऋ. ८।८४।१ 'अग्ने' इत्यस्य स्थाने 'अग्निं' इति पाठः। साम १२४४।

२. 'कीदृशम् अग्निम्? उच्यते। वेद्यं वेदनार्हम्, ज्ञानार्हमित्यर्थः' इति विवरणकारः। रथमिव वेद्यं लम्भनीयम्' इति भरतस्वामी। 'वेद्यम्। वेदो धनं, धनहितं लाभहेतुं, यथा धनेन रथं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृशधनलाभकारणम्' इति सायणः।

३. बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्' इति वि.। 'वः इति वचनव्यत्ययः, त्वामित्यर्थः' इति भ.। 'वः त्वाम्, पूजार्थे बहुवचनम्' इति सा.।

उस परमात्मा की मैं स्तुति करता हूँ, यह कहते हैं।

**पदार्थ**—हे (अग्ने) अग्रणी परमात्मन्! (प्रेष्ठम्) सबसे अधिक प्रिय (अतिथिम्) अतिथिरूप, (मित्रम् इव) मित्र के समान (प्रियम्) प्रिय, (रथं न) रथ के समान (वेद्यम्) प्राप्तव्य (वः) आपकी, मैं (स्तुषे) स्तुति करता हूं॥ ५॥

**भावार्थ**—यहां 'मित्र के समान प्रिय,' 'रथ के समान प्राप्तव्य' इन दोनों में उपमालंकार है। मित्र के समान प्रिय होना और रथ के समान प्राप्तव्य होना क्योंकि स्तुति के प्रति कारण बन रहे हैं, इसलिए काव्यलिंग अलंकार भी है। और अग्नि में अतिथित्व के आरोप के कारण रूपकालंकार है। मित्र जैसे सबको प्रिय होता है, वैसे परमात्मा उपासकों को प्रिय है। रथ जैसे गन्तव्य स्थान पर पहुंचने के लिए प्राप्तव्य होता है, वैसे ही परमात्मा प्रेय-मार्ग और श्रेय-मार्ग के लक्ष्यभूत ऐहिक और पारलौकिक उत्कर्ष को पाने के लिए सबसे प्राप्त करने योग्य तथा स्तुति करने योग्य है। और हृदयप्रदेश में विद्यमान परमात्मा साक्षात् घर में आया हुआ सबसे अधिक प्रिय अतिथि ही है। अतः वह अतिथि के समान सत्कार करने योग्य है॥ ५॥

परमात्माऽस्मान् कस्माद् रक्षेदित्याह।

**६. त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः।**
**उत द्विषो मर्त्यस्य॥६॥[1]**

त्वम् नः अग्ने महोभिः पाहि विश्वस्याः अरातेः अ रातेः
उत द्विषः मर्त्यस्य॥६॥

**पदार्थः**—हे (अग्ने) सर्वनायक तेजःस्वरूप परमात्मन्! (त्वम्) जगदीश्वरः (महोभिः) त्वदीयतेजोभिः (विश्वस्याः) सर्वस्याः (अ-रातेः[2]) न रातिः अरातिः अदानभावना शत्रुता वा तस्याः। रा दाने, भावे क्तिन्। नञ्तत्पुरुषेऽव्ययस्वरेणाद्युदात्तत्वम्। शत्रुवाचकोऽरातिशब्दः पुंसि, अदानभावनावाचकः शत्रुतावाचको वा स्त्रियामिति बोध्यम्। (उत) अपि च (मर्त्यस्य) मनुष्यस्य (द्विषः) द्वेषात्। द्विष अप्रीतौ इति धातोर्भावे क्विप्। (नः) अस्मान् (पाहि) रक्ष॥६॥

**भावार्थः**—श्लेषेण राजपक्षे विद्वत्पक्षे चापि योजनीयम्। अदानवृत्तिग्रस्तो हि मानवः स्वोदरंभरः सन् सर्वदा स्वार्थायैव यतते। तेन न कदापि सामाजिक्या-

१. ऋ. ८।७१।१।
२. 'अरातिः शत्रुः। स्त्रीलिङ्गनिर्देशो जात्यपेक्षः। सर्वस्याः शत्रुजातेः सकाशाद्' इति वि.। 'अरातेः सपत्नात्। अरातिशब्दः छन्दसि स्त्रीलिंगः। अर्तेररातिः, अभिहन्ता' इति भ.। 'विश्वस्याः बहुविधात् अरातेः अदातुः सकाशात् अदानाद् वा' इति सा.।

ध्यात्मिकी चोन्नतिः संभवति । दानपरोपकारयोर्मैत्र्याश्च भावनयैव पारस्परिक सहयोगेन लक्ष्यपूर्तिर्भवितुमर्हति । अतो हे जगदीश्वर राजन् विद्वन् वा ! त्वं नः स्वतेजोभिः, स्वकीय क्षत्राप्रतापैः, स्वविद्याप्रतापैर्वा सर्वस्या अदानवृत्तेः शत्रुतायाश्च पाहि । किञ्च, यो मर्त्योऽस्मान् द्वेष्टि द्वेषबुद्धचा चास्मदीयप्रगतौ विघ्नमुत्पादयति तस्य द्वेषादप्यस्मान् रक्ष, येन सूत्रे मणिगणा इव परस्परं सांमनस्ये प्रोता वयमुन्नता भवेम ।।६।।

परमात्मा हमारी किससे रक्षा करे, यह कहते हैं ।

**पदार्थ**—हे (अग्ने) सबके नायक तेजःस्वरूप परमात्मन् ! (त्वम्) जगदीश्वर आप (महोभिः) अपने तेजों से (विश्वस्याः) सब (अ-रातेः) अदान-भावना और शत्रुता से, (उत) और (मर्त्यस्य) मनुष्य के (द्विषः) द्वेष से (नः) हमारी (पाहि) रक्षा कीजिए ।। ६ ।।

**भावार्थ**—श्लेषालंकार से राजा के पक्ष में और विद्वान् के पक्ष में भी अर्थ-योजना करनी चाहिए । अदानवृत्ति से ग्रस्त मनुष्य अपने पेट की ही पूर्ति करने वाला होकर सदा स्वार्थ ही के लिए यत्न करता है । उससे कभी सामाजिक और आध्यात्मिक उन्नति नहीं हो सकती । दान और परोपकार की तथा मैत्री की भावना से ही पारस्परिक सहयोग द्वारा लक्ष्यपूर्ति हो सकती है । अतः हे जगदीश्वर, हे राजन् और हे विद्वन् ! आप अपने तेजों से, अपने क्षत्रियत्व के प्रतापों से और अपने विद्या-प्रतापों से हमारी सम्पूर्ण अदान-भावना तथा शत्रुता से रक्षा कीजिए । और, जो मनुष्य हमसे द्वेष करता है तथा द्वेषबुद्धि से हमारी प्रगति में विघ्न उत्पन्न करता है उसके द्वेष से भी हमारी रक्षा कीजिए, जिससे सूत्र में मणियों के समान परस्पर सांमनस्य में पिरोये रहते हुए हम उन्नत होवें ।। ६ ।।

**तं परमात्मानमहं वेदवाग्भिः स्तौमीत्याह ।**

२ ३ १र २र ३ १ २ ३ १ २ ३ १ २
**७. एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।**
३ १ २ ३ १ २
**एभिर्वर्धास इन्दुभिः ।।७।।**

२ ३ २ २ १ २र ३ १ २र ३ २ १ २र १ २र
**आ इहि उ सु ब्रवाणि ते अग्ने इत्था इतराः गिरः**
३ २ ३ १ २र
**एभिः वर्धसे इन्दुभिः ।।७।।**

**पदार्थः**—हे (अग्ने) परमात्मन् ! (आ इति उ) आ याहि तावन्मदीये हृत्प्रदेशे । संहितायाम् ऊ इत्यत्र 'इकः सुञि' अ० ६।३।१३४ इति दीर्घः । अहम् (ते) तुभ्यम्

---

१. ऋ. ६ । १६ । १६ । य. २६ । १३ । साम ७०५ ।

(इत्था[1]) सत्यभावेन। इत्थेति सत्यनाम। निघं० ३।१०। (इतराः[1]) सामान्यविलक्षणाः[2] (गिरः) वेदवाचः (सु) सम्यक्, पूर्णमनोयोगेनेति भावः। संहितायाम् 'सुञः' ८।३।१०७ इति षत्वम्। (ब्रवाणि) वदानि, वेदवाग्भिस्त्वां स्तवानीत्यर्थः। त्वम् (एभिः) एतैः मया समर्प्यमाणैः (इन्दुभिः) भावभरितैर्भक्तिरसरूपैः सोमैः। इन्दुरिति सोम उच्यते।'सोमो वा इन्दुः'। श० २।२।३।२३। (वर्धासि) वर्धस्व, आप्यायितो भव। इन्दुशब्दस्य श्लिष्टत्वात् यथा चन्द्रकिरणैः समुद्रा वनस्पतयश्च वर्धन्ते तथेति ध्वन्यते। वृधु वृद्धौ इति धातोर्लेटि 'लेटोऽडाटौ' अ. ३।४।९४ इत्याडागमः। ।।७।।

**भावार्थः**—मनुष्यकृता वाचः सामान्याः, वेदवाचस्तु परमेश्वरकृतत्वात् तद्विलक्षणाः। तासु प्रत्येकं पदं साभिप्रायं विविधार्थप्रकाशकं च। उपासका जनाश्चेत् ताभिर्गीर्भिः परमात्मानं भजेरन् तं प्रति स्वकीयान् भक्तिरससोमांश्च प्रवाहयेयुस्तदाऽसौ चन्द्रकिरणैः समुद्रवनस्पत्यादिरिव तैः सोमरसैस्तृप्तिं नीतस्तेषां हृदये परमां वृद्धिं गतस्तान् कृतकृत्यान् विदध्यात्।। ७।।

उस परमात्मा की मैं वेदवाणियों से स्तुति करता हूं, यह कहते हैं।

**पदार्थ**—हे (अग्ने) परमात्मन्! आप (आ इहि उ) मेरे हृदय-प्रदेश में आइये। मैं (ते) आपके लिए (इत्था) सत्य भाव से (इतराः) सामान्य-विलक्षण (गिरः) वेदवाणियों को (सु) सम्यक् प्रकार से, पूर्ण मनोयोग से (ब्रवाणि) बोलूं, अर्थात् वेदवाणियों से आपकी स्तुति करूं। आप (एभिः) इन मेरे द्वारा समर्पित किये जाते हुए (इन्दुभिः) भावपूर्ण भक्तिरस रूप सोमरसों से (वर्धासि) वृद्धि को प्राप्त करें। **जैसे चन्द्र-किरणों से समुद्र और वनस्पति बढ़ते हैं, यह ध्वनित होता है, क्योंकि इन्दु चन्द्र-किरणों का भी वाचक होता है**।।७।।

---

१. 'इत्था सत्या इत्यर्थः। इतरा अन्या असत्याः' इति वि.। 'इत्था इति निपातः अमुत्रेत्यर्थे च वर्तते। अत्र तु दूरस्य लक्षणा। दूरे सन्त्विति शेषः। इतरा गिरः शत्रूणां सम्बन्धिन्यः दुष्कृता इत्यर्थः। 'असुर्या ह वा इतरा गिरः' (ऐ. ब्रा. ३। ४९) इति ह्यैतरेयकम्' इति भ.। 'इत्था इत्थम् अनेन प्रकारेण सु सुष्ठु ब्रवाणि इत्याशास्यते। ताः स्तुतीः शृण्वित्यर्थः।। उ इत्येताः इतराः असुरैः कृताः स्तुतीः शृण्विति शेषः' इति सा.।

२. Other; different, that is, more excellent—Griffith.
ऐतरेयके तावद् 'एह्यू षु ब्रवाणि ते' इत्यस्याम् ऋचि उत्पन्नस्य साम्नः 'साकमश्वम्' इति नाम कथं सम्पन्नमिति व्याख्यातुं देवासुरसंग्रामस्य काल्पनिकी कथा प्रस्तुता। तदनुसारम्—अग्निष्टोमं वै देवा अश्रयन्त, उक्थानि असुराः। भरद्वाजेन ऋषिणा स्तुतोऽग्निरश्वो भूत्वा ऽसुरानभ्यद्रवत् पराजितवांश्च। एवम् उक्थान्यसुरेभ्यो मोचयामास। तत उक्थ्यं साम प्रवृत्तम्। एवम् असुरैरुच्चार्यमाणेषु उक्थेषु न कश्चन दोषः, परं तेषामसुराश्रयत्वे दोषः। अतोऽसुरैः प्रोक्ता वाचो ऽप्यसत्या नासन्। तेन कथानुसरणेऽपि 'इतराः असुरसम्बन्धिन्यः, असुरैः प्रोक्ता वा' इत्येवार्थः समायाति। अस्माभिः कथामननुसृत्य स्वतन्त्रतया व्याख्यानं कृतम्।

**भावार्थ**—मनुष्यकृत वाणियां सामान्य होती हैं, पर वेदवाणियां परमेश्वरकृत होने के कारण उनसे विलक्षण हैं। उनमें प्रत्येक पद साभिप्राय तथा विविध अर्थों का प्रकाशक है। उपासक लोग यदि उन वाणियों से परमात्मा को भजें और उसके प्रति अपने भक्तिरस रूप सोमरसों को प्रवाहित करें, तो वह चन्द्र-किरणों से जैसे समुद्र, वनस्पति आदि बढ़ते हैं, वैसे उन भक्तिरसों से तृप्त होकर और उन उपासकों के हृदय में अत्यन्त वृद्धि को प्राप्त करके उन्हें कृतकृत्य कर दे ॥ ७ ॥

### अहं परमात्मनि त्वयि प्रेम बध्नामीत्याह ।

१ २ ३ १र २र ३ १ २ ३ १ २<br>
**८. आ ते वत्सो मनो यमत् परमाच्चित् सधस्थात् ।**<br>
२ ३ १ २ ३ २<br>
**अग्ने त्वां कामये गिरा ॥ ८ ॥**[1]

२ ३ ३ २ १ २र ३ ३ २ ३ ३१ २ ३२ ३<br>
**आ ते वत्सः मनः यमत् परमात् चित् सधस्थात् सध स्थात्**<br>
१ २र २ ३ ३ २<br>
**अग्ने त्वाम् कामये गिरा ॥ ८ ॥**

**पदार्थः**—हे (अग्ने) जगत्पितः परमात्मन् ! (ते) तव (वत्सः)[2] प्रियः पुत्रोऽयम् (परमात् चित्) सुदूरादपि (सधस्थात्) प्रदेशात् । **सह तिष्ठन्ति जनाः पदार्था वा यत्र स सधस्थः सहस्थानं तस्मात् । 'सधमादस्थयोश्छन्दसि' अ० ६ । ३ । ९६ इति सहस्य सधादेशः ।** (मनः) मानसम् (आ यमत्) आयच्छति, आसमन्तादानीय त्वयि केन्द्रितं करोति । अहं तव वत्सस्त्वयि मनः केन्द्रयामीति भावः । **यमद् इति यमु उपरमे धातोर्लेटि रूपम् । 'बहुलं छन्दसि' अ० २ । ४ । ७३ इति शपो लुकि धातोर्यच्छादेशो न ।** ततश्च त्वयि केन्द्रितमानसोऽहम् (गिरा) स्तुतिवाचा (त्वाम्) परमात्मानम् (कामये) अभिलषामि, त्वत्प्रेमबद्धो भवामीति भावः ॥ ८ ॥

**भावार्थः**—यदा मानवः सांसारिकविषयाणां निःसारतां पश्यति तदा दूरात् सुदूरेषु भूप्रदेशेषु लोक-लोकान्तरेषु च भ्राम्यत् स्वकीयं मनः सर्वेभ्योऽपि प्रदेशेभ्यः प्रतिनिवर्त्य परमात्मन्येव संलगयति, गिरा च परमात्मन एव गुणधर्मान् मुहुर्मुहुः स्तौति, तत्प्रेमपरिलुप्तहृदयश्च सकलाया धरित्र्या राज्यमपि तत्समक्षं तुच्छं गणयति ॥ ८ ॥

---

१. ऋ. ८ । ११ । ७, 'कामये' इत्यस्य स्थाने 'कामया' इति पाठः । य. १२ । ११५ । साम ११६६

२. ऋचोऽस्या द्रष्टा ऋषिरपि वत्स एव । तत्तु तस्य न वास्तविकं नाम, किन्तु मन्त्रवर्णन-सौन्दर्याकृष्टः स स्वकीयम् उपनाम वत्स इति चक्रे । तेनैव नाम्ना स प्रसिद्धि गत इति बोध्यम् ।

मैं तुझ परमात्मा में अपना प्रेम बांधता हूँ, यह कहते हैं ।

**पदार्थ**—हे(अग्ने) जगत्पिता परमात्मन् ! (ते) तेरा (वत्सः) प्रिय पुत्र (परमात् चित्) सुदूरस्थ भी (सधस्थात्) प्रदेश से (मनः) अपने मन को (आयमत्) लाकर तुझ में केन्द्रित कर रहा है। अर्थात् मैं तेरा प्रिय पुत्र तुझ में मन को केन्द्रित कर रहा हूं। मैं (गिरा) स्तुति-वाणी से (त्वाम्) तुझ परमात्मा की (कामये) कामना कर रहा हूं, अर्थात् तेरे प्रेम में आबद्ध हो रहा हूं ॥ ८ ॥

**भावार्थ**—जब मनुष्य सांसारिक विषयों की निःसारता को देख लेता है, तब दूर से दूर भू-प्रदेशों में भटकते हुए अपने मन को सभी प्रदेशों से लौटा कर परमात्मा में ही संलग्न कर लेता है और वाणी से परमात्मा के ही गुण-धर्मों का बारंबार स्तवन करता है और उसके प्रेम से परिप्लुत हृदय वाला होकर सम्पूर्ण पृथिवी के भी राज्य को उसके समक्ष तुच्छ गिनता है ॥ ८ ॥

**योगिनः परमात्माग्निं हृदयवेद्यां, याज्ञिका यज्ञाग्निं यज्ञवेद्यां, वैज्ञानिका विद्युदग्निं सूर्यात् पर्जन्याच्च प्रकटयन्तीत्युच्यते ।**

१ २ ३ १ २ ३१र २र ३ १ २
**९. त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।**
३ १र २र ३ १ २
**मूर्ध्नो विश्वस्य वाघतः ॥ ९ ॥**[1]

२ ३ १ २र १ २र १२र २ ३
**त्वाम् अग्ने पुष्करात् अधि अथर्वा निः अमन्थत**
३ २ १ २र ३ १ २
**मूर्ध्नः विश्वस्य वाघतः ॥ ९ ॥**

**पदार्थः**—**प्रथमः** परमात्मपरः । हे (अग्ने) तेजःस्वरूप परमात्मन् ! (अथर्वा) न थर्वति चलति यः सः, स्थितप्रज्ञो योगीत्यर्थः । 'थर्वतिश्चरतिकर्मा, तत्प्रतिषेधः' निरु० ११ । १९ । (त्वाम्) भवन्तम् (विश्वस्य) सकलस्य जनस्य (वाघतः) वाहकात् जीवनप्रदादित्यर्थः । वह प्रापणे इति णिजन्ताच्छतरि हस्य घत्वं छान्दसम् । (मूर्ध्नः) मूर्धवन्मुख्यात् (पुष्करात्) हृदयान्तरिक्षाद् हृदयपुण्डरीकाद् वा । पुष्करम् अन्तरिक्षं, पोषति भूतानि·········इदमपि इतरत् पुष्करमेतस्मादेव, पुष्करं वपुष्करं वा । निरु० ५ । १३ । (अधि) उपरि । अधियोगे पञ्चमी । मूर्धवन्मुख्ये हृदयान्तरिक्षतले हृदयपुण्डरीकतले वा इत्यर्थः । (निरमन्थत) मथित्वा जनयति । उक्तं च श्वेताश्वतरे—"स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत् ॥" श्वेता० २ । १४ । इति ।

१. ऋ. ६ । १६ । १३ । य. ११ । ३२ उत्तरार्धः; १५ । २२ (ऋषिः परमेष्ठी)

'पुष्करपर्णाश्रयेण हि अग्निरुत्पन्नः' इत्यस्याः कथाया अयमेव मन्त्रो मूलम् । यथोच्यते—'त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमन्वविन्दत् । तै० सं० ५ । १ । ४ । ४ । इति ।

अथ **द्वितीयो** यज्ञाग्निपरः । हे (अग्ने) होमवह्ने ! (अथर्वा) अचलव्रतो यजमानः (त्वाम्) भवन्तम् (विश्वस्य वाघतः) सर्वेषाम् ऋत्विजाम् । वाघतः इति ऋत्विङ्नामसु पठितम् । निघं ३ । १८ । जातावेकवचनम् । (मूर्ध्नः) मूर्धवत् प्रधानभूतात् (पुष्करात्) यज्ञवेद्यन्तरिक्षात् यज्ञवेदिरूपात् पुष्करपर्णाद् वा (अधि) उपरि, मूर्धवत् प्रधानभूते यज्ञवेद्यन्तरिक्षे यज्ञवेदिरूपे पुष्करपर्णे वा इत्यर्थः (निरमन्थत) मथित्वा अरण्योः सकाशाज्जनयति । अत्र अचेतने होमवह्नौ चेतनवद् व्यवहार आलङ्कारिकः ।

अथ **तृतीयो** विद्युत्परः[१] । हे (अग्ने) विद्युद्वह्ने ! (अथर्वा) स्थिरप्रज्ञो मेधावी भौतिकविज्ञानविज्जनः (त्वाम्) (विश्वस्य) सर्वस्य किरणजालस्य उदकराशेर्वा (वाघतः) वाहकात् (मूर्ध्नः) मूर्धवदुपरि स्थितात् (पुष्कराद् अधि) सूर्यपुण्डरीकात् पर्जन्यपुण्डरीकाद् वा । अत्र 'अधि' इति पादपूरणः । (निरमन्थत) निष्कृष्य कलायन्त्रेषु प्रयुङ्क्ते । यद्वा, (विश्वस्य वाघतः) सर्वेषां मेधाविनां वैज्ञानिकानाम् । वाघतः इति मेधाविनामसु पठितम् । निघं० ३ । १५ । (मूर्ध्नः) प्रधानभूतात् (पुष्करात् अधि) नदीकुल्यादीनाम् उदकात् करणभूतात् । उदकं पुष्करं, पूजाकरं पूजयितव्यं वा । निरु० ५ । १३ । आपो वै पुष्करम् । श० ६ । ४ । २ । २ । (निरमन्थत) संघर्षणेन जनयति । अत्राप्यचेतने विद्युद्वह्नौ चेतनवद् व्यवहार आलङ्कारिकः ।।९।।

**भावार्थः**—अत्र श्लेषालङ्कारः । यथा खल्वरणिमन्थनेन यज्ञवेद्यन्तरिक्षे यज्ञवेदिपुण्डरीके वा यज्ञाग्निरुत्पाद्यते, तथैव स्थिरप्रज्ञैर्योगिभिर्ध्यानरूपेण मन्थनेन हृदयान्तरिक्षे हृदयपुण्डरीके वा परमात्माग्निः प्रकटीकरणीयः । किं च मनुष्यैः सूर्यात् पर्जन्याद्वा विद्युतं संगृह्य नदीकुल्यादीनामुदकराशिना च संघर्षद्वारा विद्युतमुत्पाद्य तत्प्रकाशेन भवनानि प्रकाश्य तच्छक्त्या च कलायन्त्राणि सञ्चाल्य सुखानि सेवनीयानि ।।९।।



विवरणकारस्त्वाह—"अत्रेतिहासमाचक्षते । सर्वमिदमन्धं तम आसीत् । अथ मातरिश्वा वायुः आकाशे सूक्ष्ममग्निमपश्यत् । स तममथ्नात् अथर्वा च ऋषिरिति" । एष च तन्मन्त्रभाष्यस्य सारः—हे अग्ने, अथर्वा ऋषिः त्वां मूर्ध्नः प्रधानभूतात्, पुष्करात् अन्तरिक्षात्, विश्वस्य सर्वस्य, वाघतः ऋत्विजो यजमानस्य अर्थाय निरमन्थत नितरां मथितवानिति । वस्तुतस्त्वयं सृष्ट्युत्पत्तिप्रक्रियायाम् अग्नेर्जन्मन इतिहासः । 'आकाशाद् वायुः, वायोरग्निरित्युत्पत्तिक्रमः । आकाशे सूक्ष्मरूपेणाग्नि-

१. दयानन्दर्षिणा ऋग्वेदभाष्ये यजुर्वेदभाष्ये चायं मन्त्रः सूर्यादेः सकाशाद् विद्युद्ग्रहणपर एव व्याख्यातः । यथा—ऋ. ६ । १६ । १३ मन्त्रभाष्ये भावार्थः—"हे विद्वांसो यथा पदार्थविद्याविदो जनाः सूर्यादेः सकाशाद् विद्युतं गृहीत्वा कार्याणि साध्नुवन्ति तथैव यूयमपि साध्नुत" इति । य. १५ । २२ मन्त्रभाष्ये च भावार्थः—मनुष्यैर्विद्वदनुकरणेनाकाशात् पृथिव्याश्च विद्युतं संग्रह्याश्चर्य्याणि कर्माणि साधनीयानि ।" इति ।

विद्यमान आसीत् । तम् अथर्वा परमेश्वरः पूर्वोत्पन्नो वायुश्च तस्मान्निरमन्थत प्रकटीकृतवानित्यभिप्रायो ग्राह्यः ।

'मूर्ध्नो धारकात्, विश्वस्य वाघतः निर्वाहकात्, पुष्करात् अन्तरिक्षात्, पुष्करपर्णादित्यपरे' इति भरतस्वामिभाष्याशयः । 'हे अग्ने, अथर्वा एतत्संज्ञ ऋषिः, मूर्ध्नः मूर्धवद्धारकात्, विश्वस्य सर्वस्य जगतः, वाघतः वाहकात्, पुष्करात् अधि पुष्करे पुष्करपर्णे त्वां निरमन्थत अरण्योः सकाशादजनयदिति सायणीयोऽभिप्रायः । अत्रापि पुष्करपर्णं न कमलपत्रं, किन्तु यज्ञवेद्या आकाशः, अथर्वा च स्थिरचित्तत्वेन यज्ञं कुर्वाणो यजमानः, असौ अरण्योः सकाशादग्निं जनयतीति तात्पर्यं बोध्यम् ।

उवटस्तु य० ११ । ३२ । भाष्ये 'आपो वै पुष्करं प्राणोऽथर्वा । श० ६ । ४ । २ । २ ।' इति शातपथीं श्रुतिं प्रमाणीकृत्य 'त्वां हे अग्ने, पुष्करात् उदकात् अधि सकाशात् अथर्वा अतनवान् प्राणो निरमन्थत निर्जनितवान्' इति व्याचष्टे । तदेव महीधरस्याभिप्रेतम् । तत्र प्राणः प्राणवान् परमेश्वरो विद्वान् वा, उदकानि पर्जन्यस्थानि, अग्निश्च विद्युदिति विज्ञेयम् । यद्वा, शरीरस्थः प्राणो भुक्तपीतेभ्यो रसेभ्यो जीवनाग्निं जनयतीति तात्पर्यं बोध्यम् । महीधरेण द्वितीयो वैकल्पिकोऽर्थः पुष्करपर्णेऽग्निमन्थनपर एव कृतः । भाष्यकारैस्तात्पर्यप्रकाशनं विनैव कथा लिखिता याः पाठकानां भ्रमोत्पत्तिनिमित्तं संजाताः ।

वस्तुतस्तु अथर्वनाम्नः कस्यचिद् ऋषेरितिहासोऽस्मिन् मन्त्रे नास्ति वेदमन्त्राणामीश्वरप्रोक्तत्वात् सृष्ट्यादौ प्रादुर्भूतत्वात् पश्चाद् वर्तिनाम् ऋष्यादीनां कार्यकलापस्य पूर्ववर्तिनि वेदेऽसंभवत्वाच्च ।।९।।

योगीजन परमात्माग्नि को हृदयवेदि में, याज्ञिक लोग यज्ञाग्नि को
यज्ञवेदि में और वैज्ञानिक लोग विद्युत् अग्नि को सूर्य
या बादल से प्रकट करते हैं, यह कहते हैं ।

**पदार्थ**—हे (अग्ने) अग्निस्वरूप परमात्मन् ! (अथर्वा) चलायमान न होने वाला स्थितप्रज्ञ योगी (त्वाम्) आपको (विश्वस्य) सकल जनों के (वाहकात्) वाहक अर्थात् जीवन-प्रदाता (मूर्ध्नः) मूर्धा के समान मुख्य (पुष्करात् अधि) हृदयान्तरिक्ष या हृदयपुण्डरीक के ऊपर (निरमन्थत) मथ कर प्रकट करता है ।

परमात्मा रूप अग्नि को मथ कर हृदय में प्रकट करने की प्रक्रिया बताते हुए श्वेताश्वतर उपनिषद् में कहा गया है—"अपने आत्मा को निचली अरणी बना कर और ओंकार को उपरली अरणी बना कर ध्यान रूप मन्थन के अभ्यास से छिपे हुए परमात्मा-रूप अग्नि को प्रकट करे (श्वेता. १ । १४)" । कमल के पत्ते के ऊपर अग्नि उत्पन्न हुआ था, इस कथा का आधार यही मन्त्र है ।

**द्वितीय अर्थ**—यज्ञाग्नि-पक्ष में । हे (अग्ने) होम की अग्नि ! (अथर्वा) अविचल व्रत वाला यजमान (त्वाम्) तुझे (विश्वस्य वाघतः) सब ऋत्विजों के (मूर्ध्नः) मूर्धा के समान प्रधानभूत (पुष्करात्) यज्ञवेदि के अन्तरिक्ष में अथवा यज्ञवेदि रूप कमल-पत्र के (अधि) ऊपर

(निरमन्थत) अरणियों को मथ कर उत्पन्न करता है। यहां अचेतन होमाग्नि में चेतन के समान व्यवहार आलङ्कारिक है।

**तृतीय अर्थ,** विद्युत्[1]-पक्ष में। हे (अग्ने) विद्युत् रूप अग्नि! (अथर्वा) स्थिर प्रज्ञा वाला, मेधावी भौतिकविज्ञानवेत्ता मनुष्य (त्वाम्) तुझे (विश्वस्य) समस्त किरण-समूह के अथवा जल-राशि के (वाघतः) वाहक, (मूर्ध्नः) सिर के समान ऊपर स्थित (पुष्करात् अधि) **सूर्य रूप अथवा** बादल-रूप कमल से (निरमन्थत) निकाल कर कलायन्त्रों में प्रयुक्त करता है। अथवा (विश्वस्य वाघतः) सब बुद्धिमान वैज्ञानिकों के (मूर्ध्नः) प्रधानभूत (पुष्करात् अधि) नदी, नहर आदि के जल से (निरमन्थत) संघर्षण द्वारा उत्पन्न करता है। यहां भी अचेतन विद्युत् में चेतनवत् व्यवहार आलंकारिक है॥ ९॥

**भावार्थः**—यहां श्लेषालंकार है। जैसे अरणियों के मन्थन से यज्ञवेदि के अंतरिक्ष में या यज्ञवेदि-रूप कमलपत्र के ऊपर यज्ञाग्नि उत्पन्न की जाती है, वैसे ही स्थितप्रज्ञ योगियों को ध्यान रूप मन्थन से हृदयान्तरिक्ष या हृदय-कमल में परमात्मा-रूप अग्नि को प्रकट करना चाहिए। तथा मनुष्यों को चाहिए कि सूर्य या बादल से बिजली को एकत्र करके और नदियों, नहरों आदि की जलराशि से रगड़ द्वारा बिजली उत्पन्न करके उसके प्रकाश से भवनों को प्रकाशित करके और बिजली की शक्ति से कलायन्त्रों को चला कर सुखों का सेवन करें॥ ९॥

विवरणकार माधव ने इस मन्त्र के भाष्य में यह इतिहास लिखा है—"सर्वत्र घोर अंधकार छाया हुआ था। तब मातरिश्वा वायु को आकाश में सूक्ष्म अग्नि दिखाई दी। उसने और अथर्वा ऋषि ने उस अग्नि को मथ कर प्रकट किया।" उसका किया हुआ मन्त्रार्थ साररूप में इस प्रकार है—"(अग्ने) हे अग्नि! (अथर्वा) अथर्वा ऋषि ने (त्वाम्) तुझे (मूर्ध्नः) प्रधानभूत (पुष्करात्) अंतरिक्ष से (विश्वस्य वाघतः) सब ऋत्विज् यजमानों के लिए (निरमन्थत) अतिशय रूप से मथ कर निकाला।" वस्तुतः विवरणकार-प्रदत्त कथानक सृष्ट्युत्पत्ति-प्रक्रिया में अग्नि के जन्म का इतिहास समझना चाहिए। **आकाश के बाद वायु और वायु के बाद अग्नि,** यह उत्पत्ति का क्रम है उत्पन्न हो जाने के बाद आकाश में सूक्ष्म रूप से अग्नि भी विद्यमान थी। उसे अथर्वा परमेश्वर ने पूर्वोत्पन्न वायु के साहचर्य से मथ कर प्रकट किया, यह अभिप्राय ग्रहण करना चाहिए।

---

१. ऋषि दयानन्द ने ऋग्वेदभाष्य और यजुर्वेदभाष्य में इस मन्त्र की व्याख्या सूर्य आदि से बिजली ग्रहण करने के पक्ष में की है। यथा, ऋ. ६। १६। १३ के भाष्य में भावार्थ है—"हे विद्वान् जनों! जैसे पदार्थविद्या के जानने वाले जन सूर्य आदि के समीप से बिजली को ग्रहण करके कार्यों को सिद्ध करते हैं, वैसे ही आप लोग भी सिद्ध करो।" य· १५। २२ के भाष्य का भावार्थ है—"मनुष्यों को चाहिए कि विद्वानों के समान आकाश तथा पृथिवी के सकाश से बिजुली का ग्रहण कर आश्चर्य रूप कर्मों को सिद्ध करें।"

भरतस्वामी के भाष्य का यह आशय है—'अथर्वा ने (मूर्ध्नः) धारक (विश्वस्य वाघतः) सबके निर्वाहक (पुष्करात्) अंतरिक्ष से या कमलपत्र से, अग्नि को मथ कर निकाला।' सायण का अर्थ है—'(अग्ने) हे अग्नि! (अथर्वा) अथर्वा नाम के ऋषि ने (मूर्ध्नः) मूर्धा के समान धारक (विश्वस्य) सब जगत् के (वाघतः) वाहक (पुष्करात् अधि) पुष्करपर्ण-कमलपत्र-के ऊपर (त्वाम्) तुझे (निरमन्थत) अरणियों में से उत्पन्न किया।' यहां भी पुष्करपर्ण सचमुच का कमलपत्र नहीं है, किन्तु यज्ञवेदि का आकाश है, और अथर्वा है स्थिर चित्त से यज्ञ करने वाला यजमान—जो यज्ञकुंड में अरणियों से अग्नि उत्पन्न करता है, यह तात्पर्य जानना चाहिए।

उवट ने य. ११। ३२ के भाष्य में **'जल ही पुष्कर हैं, प्राण अथर्वा है'** श. ४। २। २। २ यह शतपथ ब्राह्मण का प्रमाण देकर मन्त्रार्थ किया है—'तुझे हे अग्नि, (पुष्करात्) जल में से (अथर्वा) सतत गतिमान् प्राण ने (निरमन्थत) मथ कर पैदा किया।' यही अर्थ महीधर को भी अभिप्रेत है। यहां प्राण से प्राणवान् परमेश्वर या विद्वान् मनुष्य, जल से बादल में स्थित जल और अग्नि से विद्युत् जानने चाहिएं। अथवा शरीरस्थ प्राण खाये-पिये हुए रसों से जीवनाग्नि को उत्पन्न करता है, यह तात्पर्य समझना चाहिए। महीधर ने दूसरा वैकल्पिक अर्थ पुष्करपर्ण (कमलपत्र) के ऊपर अग्नि को मथने परक ही किया है। भाष्यकारों ने तात्पर्य प्रकाशित किये बिना ही कथाएं लिख दी हैं. जो भ्रम की उत्पत्ति का कारण बनी हैं।

वस्तुतः अथर्वा नामक किसी ऋषि का इतिहास इस मन्त्र में नहीं है, क्योंकि वेदमन्त्र ईश्वरप्रोक्त हैं तथा सृष्टि के आदि में प्रादुर्भूत हुए थे और पश्चात्वर्ती ऋषि आदियों के कार्यकलाप का पूर्ववर्ती वेद में वर्णन नहीं हो सकता ॥ ९ ॥

**अथ परमात्मनः सकाशात् परमं ज्योतिः प्रार्थ्यते।**

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
**१०. अग्ने विवस्वदाभरास्मभ्यमूतये महे।**
३ १र २र ३ २
**देवो ह्यसि नो दृशे ॥१०॥**

१ २र १ २र २ ३ २ ३ ३ १ २ ३ १ २ ३ २
**अग्ने विवस्वत् वि वस्वत् आ भर अस्मभ्यम् ऊतये महे**
३ २ २ १ २र ३ ३ २
**देवः हि असि नः दृशे ॥१०॥**

**पदार्थः**—हे (अग्ने) परमपितः परमात्मन्! त्वम् (महे) महत्यै। मह **पूजायामिति धातोः क्विपि चतुर्थ्येकवचने रूपम्। (ऊतये) रक्षायै। रक्षणार्थाद् अवतेः 'ऊतियूतिजूति०' अ० ३। ३। ९७। इत्यनेन क्तिन् स चोदात्तः। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' अ० ६। ४। २०। इति वकारस्योपधायाश्च स्थाने ऊठ्। (अस्मभ्यम्) अस्मदर्थम्**

(विवस्वत्[१]) विवासयति तमांसि इति विवस्वत् अविद्यान्धकारनिवारकम् अध्यात्म-प्रकाशम् (आ भर) आहर । हृञ् हरणे धातोः 'हृग्रहोर्भश्छन्दसि' अ० ८ । २ । ३२ वा० इति वार्तिकेन हस्य भः । (हि) यस्मात्, त्वम् (नः) अस्माकम् (दृशे) दर्शनाय, विवेक दृष्टिप्रदानाय । 'दृशे विख्ये च' अ० ३ । ४ । ११ इति निपातनात् तुमर्थे केप्रत्ययः । (देवः) प्रकाशकः । द्युत्यर्थाद् दिवु धातोः पचाद्यच् । (असि) वर्तते ॥१०॥

**भावार्थः**—श्लेषालङ्कारेण मन्त्रः सूर्यपक्षेऽपि योजनीयः । सूर्याग्निर्यथा जीवानां रक्षणाय तमोनिरासकं ज्योतिः प्रयच्छति, तथा परमेश्वरोऽविद्यास्मिता-रागद्वेषमोहाद्यन्धकारनिरासायास्मभ्यम् आध्यात्यिकं तेजः प्रदद्यात् । अत्र सकारस्य, मकारस्य, दकारस्य चासकृदावर्तनाद् वृत्त्यनुप्रासोऽलङ्कारः ॥१०॥

**इति प्रथमे प्रपाठके, प्रथमार्धे प्रथमा दशतिः ।**

**इति प्रथमेऽध्याये प्रथमः खण्डः ।**



अब परमात्मा के पास से परम ज्योति की प्रार्थना करते हैं।

**पदार्थ**—हे (अग्ने) परम पिता परमात्मन् ! आप (महे) महान् (ऊतये) रक्षा के लिए (अस्मभ्यम्) हमें (विवस्वत्) अविद्यान्धकार को निवारण करने वाला अध्यात्म-प्रकाश (आ भर) प्रदान कीजिए । (हि) क्योंकि, आप (नः) हमारे (दृशे) दर्शन के लिए, हमें विवेक-दृष्टि प्रदान करने के लिए (हि) निश्चय ही (देवः) प्रकाश देने वाले (असि) हैं ॥ १० ॥

**भावार्थ**—श्लेषालंकार से मन्त्र की सूर्यपरक अर्थयोजना भी करनी चाहिए । सूर्यरूप अग्नि जैसे जीवों की रक्षा के लिए अन्धकार-निवारक ज्योति प्रदान करता है, वैसे ही परमेश्वर अविद्या, अस्मिता, राग, द्वेष, मोह आदि रूप अंधकार के निवारण के लिए हमें आध्यात्मिक तेज प्रदान करे ।

इस मन्त्र में स्, म् और द् की अनेक बार आवृत्ति होने से वृत्त्यनुप्रास अलंकार है ।१०।

**प्रथम प्रपाठक, प्रथम अर्ध में प्रथम दशति समाप्त ।**

**प्रथम अध्याय में प्रथम खण्ड समाप्त ।**



---

१. 'विवस्वत् विवासनवत् तमसां विवासनकरम् । किं तत् ? सामर्थ्यात् ज्योतिः' इति वि. । 'विवासयत् तमांसि तेजः' इति भ. । 'विवस्वत् स्वर्गादिलोकेषु विशेषेण निवासस्य हेतुभूतमिदं कर्म आभर सम्पादय' इति सा. ।